


२३

# बहिरङ्गसाधनम्

## प्रस्तावना

परम्परासाधनानि एव शास्त्रेषु क्वचित् बहिरङ्गसाधनानि इत्यपि उच्यन्ते। .अन्तःकरणशुद्धिकारणानि साधनानि सर्वाण्यपि अत्र अन्तर्भवन्ति। कर्मयोगादीनि नानाविधानि साधनानि अन्तःकरणशुद्धिकारणानि शास्त्रेषु उपदिश्यन्ते। प्रसिद्धानाम् परम्परासाधनानाम् अस्मिन् पाठे यथाशास्त्रं विवरणं क्रियते।



## उद्देश्यानि

अमुम् पाठम् पठित्वा भवान् –

- अद्वैतवेदान्तमते मोक्षस्य परम्परासाधनानि कानि इति ज्ञातुं शक्नुयात्।
- कर्मणाम् उपासनानाञ्च मोक्षोपायरूपेण अनुष्ठानं कथं कार्यम् इति ज्ञातुं शक्नुयात्।
- शास्त्रे प्रसिद्धानाम् कर्मयोगादीनाम् परम्परासाधनानां विषये विस्तरेण ज्ञातुम् प्रभवेत्।

## २३.१ मोक्षस्य परम्परासाधनानि

मोक्षस्य परम्परासाधनानि इत्यनेन मोक्षम् प्रति साक्षात्साधनस्य ब्रह्मज्ञानस्य समुत्पत्तौ यानि परम्परासाधनानि भवन्ति तानि एव बोद्धव्यानि।

चित्तशुद्धिकारणानि साधनानि एव परम्परासाधनानि अथवा बहिरङ्गसाधनानि इति प्रसिद्धानि। परम्परासाधनानि नानाविधानि शास्त्रे निर्दिश्यन्ते। आहारशुद्धौ सत्त्वशुद्धिः इति छान्दोग्योपनिषदि (७.२६.२) श्रूयते। अत्र आहारशब्दस्य व्याख्यानं भाष्यकारभगवत्पूज्यपादैः एवं कृतम् – आह्रियत इत्याहारः शब्दादिविषयज्ञानम् इति। इन्द्रियैः पवित्राणां विषयाणां संयमपूर्वकं सेवनेन अन्तःकरणशुद्धिः भवति इति भगवत्पूज्यपादानाम् आशयः। भगवान् श्रीकृष्णः श्रीमद्भगवद्गीतायां यज्ञः, दानं, तपः इत्येतानि निस्सङ्गतया अनुष्ठितानि चित्तशुद्धिकारणानि भवन्ति इति अस्मान् उपदिशति – यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् (श्रीमद्भगवद्गीता १८.५)। मनुमहर्षिः मनुस्मृतौ तपः चित्तशुद्धेः साधनम् भवति इति बोधयति – तपसा कल्पषं हन्ति (मनुस्मृतिः १२.१०४) इति। कर्मयोगेन चित्तशुद्धिः भवति इत्यपि श्रीभगवान् गीताशास्त्रे समुपदिशति – योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ (श्रीमद्भगवद्गीता ५.११) इति। ध्यानेन चित्तं शुद्ध्यति इत्यपि भगवान् गीताशास्त्रे वदति – उपविश्यासने



युञ्ज्याद् योगम् आत्मविशुद्धये (श्रीमद्भगवद्गीता ६.१२) इति। योगदर्शने प्रसिद्धानि यमनियमादीनि साधनानि अपि अन्तःकरणशुद्धिं जनयन्ति इति शङ्करभगवत्पादाः ब्रह्मसूत्रभाष्ये अङ्गीकुर्वन्ति। अन्यानि अपि बहुविधानि साधनानि सत्त्वशुद्धिकारणानि शास्त्रेषु श्रूयन्ते।

अत्र वयं कर्मयोगः, ध्यानयोगः, भक्तियोगः, यमनियमादिकम् इत्येतेषां चतुर्विधानाम् परम्परासाधनानां विषये सङ्क्षेपतः विचारयामः।



## पाठगतप्रश्नाः-१

१. परम्परासाधनानाम् अन्यत् वै किम्।

२. शास्त्रे निर्दिष्टानि नानाविधानि परम्परासाधनानि कानि।

## २३.२ कर्मणाम् उपासनानां च मोक्षोपायतया अनुष्ठानम्

ब्रह्मविद्यया अविद्यामयस्य संसारस्य निवृत्तिः नित्यनिरतिशयानन्दप्राप्तिश्चेति महत् प्रयोजनं सिद्ध्यतीति ज्ञातम्। परन्तु सर्वेषां जीवानां स्वरूपम् ब्रह्मैव इति भूयो भूयः श्रुत्वाऽपि केन हेतुना अस्माकम् अन्तःकरणेषु ब्रह्मविद्या न समुदेति इति भवति शङ्का। तत्र कारणम् अस्माकं अन्तःकरणस्य मालिन्यम्। सत्त्वरजस्तमोगुणमयाद् अज्ञानाद् उत्पन्नं खलु अन्तःकरणं सर्वेषाम्। अत एव अन्तःकरणं गुणत्रयात्मकम् भवति। त्रिषु गुणेषु सत्त्वगुणः प्रकाशकः। रजोगुणः कामक्रोधरागद्वेषादीनाम् उत्पादकः। तमोगुणस्तु प्रमादालस्यनिद्रामोहादीनां जनकः। रजसि तमसि च क्षीणे सत्त्वगुणाधिक्यात् अन्तःकरणं यथायथं सर्वम् प्रकाशयति। रजसा तमसा च अभिभूतम् अन्तःकरणं दृष्टस्य स्पृष्टस्य श्रुतस्य आघ्रातस्य रसितस्य च विषयस्य वास्तविकं स्वरूपम् प्रकाशयितुं न शक्नोति। अस्माभिः सर्वैः विद्युद्दीपः दृष्टः। विद्युद्दीपः प्रकाशकद्रव्येण पूर्णः अस्ति। किन्तु तस्य बहिर्देशः धूल्यादिमालिन्ययुक्तः चेत् सः स्वस्य अन्तः निहितायाः दीप्तेः बहिः प्रकाशने असमर्थः भवति। एवमेव अन्तःकरणम् प्रकाशनशीलेन सत्त्वगुणेन सहितं चेदपि रजसा तमसा च योगात् अशुद्धम् अस्ति इत्यतः स्वान्तर्निहितस्य ब्रह्मणः प्रकाशने असमर्थम् भवति। तस्मात् यदि अस्माभिः ब्रह्मविद्या इष्यते तर्हि प्रथमम् अन्तःकरणस्य शुद्धिः यत्नेन सम्पादनीया। अन्तःकरणे विद्यमानात् सत्त्वगुणात् रजोगुणः तमोगुणश्च दूरीकरणीयः इत्यर्थः। अतः एव अन्तःकरणस्य शुद्धिः सत्त्वशुद्धिः इत्यपि व्यपदिश्यते। यस्य सत्त्वशुद्धिः अस्ति तस्यैव साधनचतुष्टयं सिद्ध्यति। साधनचतुष्टयसम्पन्नः एव ब्रह्मबोधकानि वेदान्तवाक्यानि श्रुत्वा ब्रह्मविद्यां लभते।

अन्तःकरणशुद्धिः कथम् अस्माभिः प्राप्तुं शक्या। योगबुद्ध्या (योगबुद्धिः -- निरहङ्कारा निःस्वार्था बुद्धिः।) यदि वयं कर्मणाम् उपासनानां च अनुष्ठानं कुर्मः तर्हि अस्माकम् अन्तःकरणं क्रमशः शुद्धम् भवति। प्रायेण शारीरकं कर्म एव कर्मशब्देन अत्र उच्यते, मानसिकं कर्म तु उपासनशब्देन अभिधीयते। शास्त्रे बहुविधानि कर्माणि उपासनानि च विहितानि सन्ति। एषां कर्मणाम् उपासनानाञ्च यथाविधि अनुष्ठानेन



प्राप्तुं शक्यानि फलानि च शास्त्रे बोधितानि विद्यन्ते। यदि वयम् एषां कर्मणाम् उपासनानाञ्च अनुष्ठानम् फलेच्छया एव कुर्मः तर्हि वयम् पुनः पुनः कामनानां वशीभूताः एव भवामः। प्रत्युत यदि फलेच्छाम् परित्यज्य वयं कर्मोपासनानुष्ठाने निरताः भवेम तर्हि अस्माकम् अन्तःकरणं शुद्धम् एकाग्रं च भवेत्। निर्मलम् एकाग्रञ्च अन्तःकरणं साधनचतुष्टयसम्पन्नम् भवति। तादृशे अन्तःकरणे वेदान्तशास्त्रश्रवणेन ब्रह्मविद्या समुदेति। तस्मात् कर्मणाम् उपासनानाञ्च निष्कामतया एव अनुष्ठानं कर्तव्यम् मुक्तिकामैः।

काम्यं निषिद्धं नित्यं नैमित्तिकम् प्रायश्चित्तञ्चेति पञ्चविधानि कर्माणि प्रथन्ते। यैः कर्मभिः स्वर्गादि इष्टम् फलं लभ्यते तानि कर्माणि काम्यानि। येषां कर्मणां नरकादि अनिष्टम् एव फलं तानि शास्त्रेण प्रतिषिद्धानि कर्माणि निषिद्धानि। ब्राह्मणादीन् वर्णान् ब्रह्मचर्यादीन् आश्रमान् च उद्दिश्य नित्यकर्तव्यतया शास्त्रेण विहितानि कर्माणि नित्यानि। पुत्रजन्मादिरूपं किमपि विशिष्टं निमित्तम् आश्रित्य यानि कर्माणि कर्तव्यानि भवन्ति तानि नैमित्तिकानि। पापं कृतं चेत् तस्य क्षयार्थं यत् कर्म कर्तव्यं तत् प्रायश्चित्तम्। एषु काम्यं निषिद्धं च वर्जयित्वा अन्यानि त्रिविधानि कर्माणि अस्माभिः कर्तव्यानि भवन्ति। एषां नित्यनैमित्तिकप्रायश्चित्तानां शास्त्रप्रसिद्धानां कर्मणाम्, गुरुजनैः कर्तव्यतया अस्मभ्यम् उपदिष्टानां कर्मणां च मोक्षसाधनरूपेण अनुष्ठानम् एव वेदान्तशास्त्रे कर्मयोगः इत्युच्यते। कर्मयोगेन चित्तमलानां नाशः भवति, ततश्च चित्तं शुद्ध्यति।

उपासनं द्विविधम् – सगुणब्रह्मविषयकं निर्गुणब्रह्मविषयकञ्च इति। सगुणब्रह्मविषयकम् उपासनम् एव ब्रह्मविद्यायाः बहिरङ्गसाधनेषु अथवा परम्परासाधनेषु गण्यते। निर्गुणब्रह्मविषयकम् उपासनं तु निदिध्यासनम् इति नाम्ना प्रसिद्धम्। तत् अन्तरङ्गसाधनेषु अन्तर्भवति (श्रवणम् मननं निदिध्यासनञ्च ब्रह्मविद्योत्पत्तिम् प्रति अन्तरङ्गसाधनानि भवन्ति।)। सगुणब्रह्मविषयकानि उपासनानि उपनिषत्सु मुख्यतया द्विविधानि श्रूयन्ते – अहङ्ग्रहोपासनम् प्रतीकोपासनं चेति। एषां द्विविधानाम् अपि उपासनानां स्वकीयानि फलानि सन्ति। तेषु फलेषु कामनाम् परित्यज्य चित्तशुद्ध्यर्थम् अपि उपासनं कर्तुं शक्यते। अन्तःकरणशुद्धिद्वारा ब्रह्मविद्योदयस्य उपायभूतम् अन्यत् अपि द्विविधम् उपासनं विद्यते – ध्यानयोगः, भक्तियोगश्च इति। ध्यानम् भक्तिश्च मनसा एव क्रियते इत्यतः ध्यानयोगस्य भक्तियोगस्य च मानसव्यापाररूपे उपासने अन्तर्भावः भवति। ध्यानेन चित्तविक्षेपाणां क्षयात् चित्तस्य एकाग्रता भवति। एकाग्रता चित्तशुद्धिं वर्धयति, साधनचतुष्टयसम्पत्तौ च साहाय्यं विदधाति। भक्त्या च ईश्वरप्रसादः भवति, भगवत्कृपया च चित्तशुद्धिः, साधनचतुष्टयम्, वेदान्तवाक्यार्थस्य अवगमनम्, मोक्षः इत्यादिकं सर्वं क्षणेन सेत्स्यति।



## पाठगतप्रश्नाः-२

३. अन्तःकरणं कथं शुद्धम् भवति।

४. विद्युद्दीपदृष्टान्तेन अन्तःकरणस्य शोधनं वर्णयत।

५. द्विविधम् उपासनं किम्।



६. भक्तियोगः ध्यानयोगश्च कथम् उपासनेषु अन्तर्भवति।

## २३.३ कर्मयोगः

देहे इन्द्रियेषु अन्तःकरणे च सत्त्वं रजः तमः इत्याख्यैः त्रिभिः गुणैः नानाविधानि कर्माणि उपजायन्ते। एतानि अध्यासवशात् आत्मनि आरोप्यन्ते जीवैः। गुणैः जायमानेषु कर्मसु अध्यासेन संसक्तः जनः कामादीनां वशीभूतः सन् अहं कर्माणि करोमि इति विभावयति। ततश्च स तेषां कर्मणाम् फलानि भुञ्जानः संसारम् अनुभवति।

अस्मात् संसारात् मुक्तिः तु अध्यासस्य अत्यन्तनिवृत्त्या एव सम्भवति। देहेन्द्रियादिसङ्घातस्य आत्मनश्च मध्ये यः परस्परम् अध्यासः स अविद्या इत्यपि उच्यते। अविद्या ब्रह्मविद्यया एव चिराय निवर्तते। ब्रह्मविद्या च कामाक्रोधादिभिः अशुद्धे मनसि न समुदेति। तस्मात् साधकः प्रथमम् अन्तःकरणशुद्ध्यै कामक्रोधादिकं निगृह्य निस्सङ्गतया कर्माणि कुर्यात्।

निस्सङ्गतया यत्किमपि यथेच्छं कुर्मः चेत् सः कर्मयोगः भवति वा। न, स्वस्य कर्तव्यानां कर्मणां निस्सङ्गतया अनुष्ठानम् एव कर्मयोगः। कर्तव्यं किम्, अकर्तव्यं किम् इत्यत्र अस्माकं यदा संशयः भवेत् तदा शास्त्रम् आचार्याणां वचनं च प्रमाणरूपेण स्वीकार्यम्। अस्माकं स्वधर्मः अथवा कर्तव्यं कर्म अवस्थाभेदेन भिद्यते। तस्मात् अस्माभिः शास्त्राचार्यवाक्यानि श्रुत्वा विवेकपूर्वकम् एव स्वधर्मः निश्चेतव्यः भवति। स च स्वधर्मः मोक्षार्थिभिः योगबुद्ध्या समनुष्ठेयः। अत एव भगवान् गीताशास्त्रे उवाच – तस्माच्छास्त्रम् प्रमाणं ते कार्याकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ (श्रीमद्भगवद्गीता, अध्यायः १६, श्लोकः २४), स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः (श्रीमद्भगवद्गीता, अध्यायः १८, श्लोकः ४५), स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः (श्रीमद्भगवद्गीता, अध्यायः १८, श्लोकः ४६), श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ (श्रीमद्भगवद्गीता, अध्यायः १८, श्लोकः ४७) इत्यादि।

कर्मणां योगबुद्ध्या समनुष्ठानम् एव कर्मयोगः इति प्रोच्यते। अहं करोमि इति कर्तृत्वबुद्धिम् इदं फलम् मम भवतु इति फलाभिसन्धिं च विना या बुद्धिः निस्स्वार्थतायाम् अवतिष्ठति सा एव योगबुद्धिः। योगबुद्धिः कामक्रोधादिभिः (कामः, क्रोधः, लोभः, मोहः, मदः, मात्सर्यम्, डम्भः, असूया इत्येते अष्ट पाशाः इति उच्यन्ते।) कदापि न विचलति। योगबुद्धियुक्तः जनः सर्वाणि अपि कर्माणि यत्नेन करोति चेदपि कर्मफलानां सिद्धौ न तुष्यति, तेषाम् असिद्धौ च न खिद्यति। स समत्वेन सर्वम् पश्यति। अनया बुद्ध्या यदि वयं कर्माणि कुर्मः तर्हि अस्माकम् अन्तःकरणं शुद्धम् भविष्यति, क्रमेण साधनचतुष्टयञ्च सम्पत्स्यते। इदं सर्वं संकलय्य श्रीभगवान् उवाच –

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥ (श्रीमद्भगवद्गीता, अध्यायः २, श्लोकौ ४८) इति।**

कर्मयोगस्य अभ्यसनस्य सुकरः कश्चन उपायः अस्ति ईश्वरार्पणबुद्ध्या कर्मणाम् अनुष्ठानम्। ईश्वरभक्तः कर्मयोगी स्वकर्मणां समाचरणेन भगवन्तम् अर्चयति। स कर्मणाम् फलानि न वाञ्छति। भगवान् मयि प्रसन्नः भूत्वा मम अन्तःकरणं निर्मलं विदधातु इत्येव स प्रार्थयति। ईदृशं कर्मयोगाभ्यासं श्रीभगवान् गीताशास्त्रे उपदिष्टवान् –

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतम् पदमव्ययम्॥**

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः। बुद्धियोगमुपाश्रित्य मच्चित्तः सततम् भव॥ (श्रीमद्भगवद्गीता, अध्यायः १८, श्लोकौ ५६, ५७) इति।**

## २३.३.१ कर्मयोगस्य फलम्

कर्मयोगस्य साक्षात्फलम् अस्ति चित्तशुद्धिः। परम्पराफलं तु मुक्तिः।

निष्कामकर्मयोगः महत् पुण्यकर्म वर्तते। निष्कामकर्मयोगेन जातेन पुण्येन चित्तस्य पापं नश्यति। रागद्वेषादिकम् अथवा कामक्रोधादिकम् अस्ति चित्तस्य पापम्। इदम् पापम् एव चित्तस्य मलम्। मलिनं चित्तं वेदान्तवाक्यैः बोधितस्य आत्मस्वरूपस्य सुष्ठु ग्रहणे समर्थं न भवति। यदा साधकः निस्सङ्गतया कर्माचरणे निष्ठां प्राप्नोति तदा पापानि विनश्यन्ति, चित्तं च शुद्ध्यति।

किन्तु प्रारम्भे एव साधकः निष्कामकर्मयोगे निष्ठावान् न भवति। अभ्यासेन स कर्मयोगे निष्ठां सम्पादयति। कर्मयोगे निष्ठावान् साधकः योगारूढः इत्युच्यते। अत्र योगः इत्यस्य कर्मयोगः इत्यर्थः। योगरूढस्य लक्षणं श्रीभगवान् गीताशास्त्रे एवं प्राह –

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।**
**सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकः ४) इति।**

**अन्वयः** – यदा हि न इन्द्रियार्थेषु अनुषज्जते, न कर्मसु (अनुषज्जते), सर्वसङ्कल्पसंन्यासी, तदा योगारूढः उच्यते।

**तात्पर्यम्** – यदा कर्तव्यानि सर्वाणि अपि कर्माणि कुर्वन् एव कश्चित् साधकः सर्वान् कामहेतून् सङ्कल्पान् संन्यस्यति, इन्द्रियविषयेषु कर्मसु च न सज्जते, तदा स कर्मयोगारूढः इति ज्ञायते।

इयं योगारूढस्थितिः अथवा कर्मयोगनिष्ठा यदा प्राप्यते तदा साधकस्य चित्तम् प्रायेण शुद्धम् (प्रायेण शुद्धम् – यद्यपि कर्मयोगेन चित्तशुद्धिः भवति इति उच्यते तथापि वस्तुतः कर्मयोगमात्रेण सम्पूर्णतया चित्तशुद्धिः न भवति। ब्रह्मविद्यया अथवा आत्मज्ञानेन एव चित्तं सम्पूर्णतया शुद्धम् भवति। चित्ते अवस्थितानि रागद्वेषादीनि मलानि आत्मज्ञानेन एव नितान्तं विनश्यन्ति। तस्मात् कर्मयोगेन चित्तम् प्रायेण शुद्धम् भवति इति उक्तम्।) इति ज्ञायते। इयं चित्तशुद्धिः एव कर्मयोगाभ्यासस्य साक्षात्फलम्।

परम्परया तु कर्मयोगनिष्ठः साधकः विवेकवैराग्यादिरूपं साधनचतुष्टयम् प्राप्य वेदान्तवाक्यानां तात्पर्यभूतम् आत्मस्वरूपम् ब्रह्म साक्षात्करोति। ब्रह्मसाक्षात्कारः एव ब्रह्मविद्या इत्यपि उच्यते।



आत्मस्वरूपविषयिण्या अनया विद्यया आत्मस्वरूपविषयिण्याम् अविद्यायां निवृत्तायां संसारात् मुक्तिः भवति। इदं गीताशास्त्रे श्रीभगवान् एवम् उपदिशति –

**येषां त्वन्तगतम् पापं जनानाम् पुण्यकर्मणाम्।**
**ते द्वन्द्वमोहनिर्मुक्ताः भजन्ते मां दृढव्रताः॥ (श्रीमद्भगवद्गीता, अध्यायः ७, श्लोकः २८)**

**अन्वयः** – येषाम् पुण्यकर्मणां जनानां तु पापम् अन्तगतं ते द्वन्द्वमोहनिर्मुक्ताः दृढव्रताः माम् भजन्ते।

**तात्पर्यम्** – कर्मयोगः एवात्र पुण्यकर्म इत्युक्तः। रागद्वेषादिकम् अथवा कामक्रोधादिकम् एव पापम्। इच्छाद्वेषादिरूपम् भवति द्वन्द्वम्। द्वन्द्वनिमित्तः मोहः अस्माकं चित्तं वशीकृत्य अस्मान् पापकर्मसु प्रवर्तयति। ये जनाः कर्मयोगाख्यम् पुण्यकर्म कुर्वन्ति ते द्वन्द्वमोहात् निर्मुक्ताः भवन्ति। अत एव तेषाम् पापं क्रमशः नश्यति, चित्तं च शुद्ध्यति। कर्मयोगे दृढव्रताः ते साधकाः परमात्मानम् एव सर्वदा भजन्ते। ब्रह्मविद्यया परमात्मानं साक्षात्कृत्य तस्मिन् एव रमन्ते इत्यर्थः।

## २३.३.२ भगवद्गीतायां कर्मयोगोपदेशः

> गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
> या स्वयम् पद्मनाभस्य मुखपद्माद् विनिःसृता॥

एवञ्च मुक्तिरेव कर्मयोगस्य परम्परया लभ्यम् फलम् इति अवगम्यते।

श्रीमद्भगवद्गीता योगशास्त्रम् इति नाम्ना विद्वद्भिः स्तूयते। आत्मस्वरूपबोधाय यः साधनमार्गः स एव योगः इत्युच्यते। यद्यपि भगवता श्रीकृष्णेन गीताशास्त्रे बहुविधानां योगानां सारः समुपदिष्टः तथापि कर्मयोगविषये भगवता कृतः उपदेशः अत्यन्तम् प्रसिद्धः। अत एव लोके प्रसिद्धिः – भगवद्गीता अस्मान् स्वकर्मणः निःसङ्गतया अनुष्ठानमेव बोधयति इति। गीताशास्त्रे आद्यन्तं कर्मयोगपराः श्लोकाः विद्यन्ते। यथा –

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि॥ (अध्यायः २, श्लोकः ४७)

**अन्वयः** – कर्मणि एव ते अधिकारः। कदाचन फलेषु मा (ते अधिकारः स्यात्)। कर्मफलहेतुः मा भूः। अकर्मणि ते सङ्गः मा अस्तु।

**तात्पर्यम्** – चित्तशुद्धिः यस्य वर्तते स एव कर्मणाम् परित्यागे अधिकारी भवति। कर्माणि परित्यज्य शुद्धचित्तः साधनचतुष्टयान्तर्भूतं शमादिकं शीलयति। तस्मात् यस्य चित्तशुद्धिः नास्ति स कर्मसु एव अधिकारी। स चित्तशुद्ध्यर्थं कर्माणि कुर्यात्। किन्तु कर्मफलाकाङ्क्षया यः कर्माणि करोति तस्य

चित्तं न शुद्ध्यति। तस्मात् चित्तशुद्धिं यः कामयते तस्य केवलं कर्मसु एव अधिकारः, न तु कर्मफलेषु। स कर्मफलानां स्वयं हेतुः न भवेत्, कर्मफलेच्छाम् परित्यजेत् इत्यर्थः। कर्मफलेच्छा परित्यक्तव्या इत्युक्ते कदाचित् कोऽपि कर्माणि एव परित्यजेत् इति चिन्तयन् भगवान् विशेषतः उपदिशति – तव अकर्मणि सङ्गः मा अस्तु इति। कर्माणि एव परित्यज्य अलसः मा भव। विना कर्मानुष्ठानं कस्यापि चित्तशुद्धिः न सिद्ध्यति। तस्मात् कर्मफले यथा सङ्गः न युक्तः तथा कर्मणाम् अननुष्ठाने अपि सङ्गः न युक्तः।

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥ (अध्यायः २, श्लोकः ४८)

**अन्वयः** – (हे) धनञ्जय, योगस्थः (सन्) सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योः समः भूत्वा (च) कर्माणि कुरु। समत्वं योगः उच्यते।

**तात्पर्यम्** – कर्तृत्वबुद्ध्या फलाभिसन्ध्या च विरहितस्य अन्तःकरणस्य यत् समत्वं तदेव योगः। योगं समाश्रित्य एव सर्वविधः अपि सङ्गः त्यक्तुं शक्यते। योगे स्थितिं सङ्गस्य त्यागञ्च यः वाञ्छति सःकर्ता कर्मफलानां सिद्धौ असिद्धौ च समः भवेत्। तत्र कारणम् इदम् – समत्वम् एव योगः इत्युच्यते।

## २३.४ स्वपाठाय – (परीक्षार्थं न)

- न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
  कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥ (अध्यायः ३ श्लोकः ५)
- कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
  इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते॥ (अध्यायः ३ श्लोकः ६)
- यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
  कर्मेन्द्रियैः कर्मयोगम् असक्तः स विशिष्यते॥ (अध्यायः ३ श्लोकः ७)
- यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
  तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥ (अध्यायः ३ श्लोकः ९)
- तस्मादसक्तः सततं कार्यं कर्म समाचर।
  असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥ (अध्यायः ३ श्लोकः १९)
- प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
  अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥ (अध्यायः ३ श्लोकः २७)
- तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
  गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते॥ (अध्यायः ३ श्लोकः २८)
- मयि सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा।
  निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥ (अध्यायः ३ श्लोकः ३०)



- इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
  तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ॥ (अध्यायः ३ श्लोकः ३४)
- श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
  स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ (अध्यायः ३ श्लोकः ३५)
- यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः।
  ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितम् बुधाः॥ (अध्यायः ४, श्लोकः १९)
- त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
  कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः॥ ((अध्यायः ४, श्लोकः २०)
- निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
  शारीरं केवलं कर्म कुर्वन् नाप्नोति किल्बिषम्॥ (अध्यायः ४, श्लोकः २१)
- यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
  समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥ (अध्यायः ४, श्लोकः २२)
- ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
  लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥ (अध्यायः ५, श्लोकः १०)
- कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
  योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥ (अध्यायः ५, श्लोकः ११)
- युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
  अयुक्तः कामकारेण फले सक्तो निबध्यते॥ (अध्यायः ५, श्लोकः १२)
- आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
  योगारूढस्य तस्यैव शमः कारणमुच्यते॥ (अध्यायः ६, श्लोकः ३)
- यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
  सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते॥ (अध्यायः ६, श्लोकः ४)
- यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
  यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ (अध्यायः १८, श्लोकः ५)
- एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
  कर्तव्यानीति मे पार्थ निश्चितम् मतमुत्तमम्॥ (अध्यायः १८, श्लोकः ६)
- कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन।
  सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः॥ (अध्यायः १८, श्लोकः ९)
- न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।



यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥ (अध्यायः १८, श्लोकः ११)

- यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
  स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ (अध्यायः १८, श्लोकः ४६)

- श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
  स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्मिषम्॥ (अध्यायः १८, श्लोकः ४७)

## २३.४.१ कर्मयोगस्य माहात्म्यविषये स्वामिविवेकानन्देन कृतम् प्रबोधनम्

स्वस्य कर्तव्यं कर्म न कदापि निन्द्यम्, केनापि स्वकर्तव्यं न परित्याज्यम्, योगबुद्ध्या तत् अनुष्ठेयम् इति स्वामी विवेकानन्दः अपि अस्मान् प्रबोधयति। कर्मयोगम् अधिकृत्य स्वामिना पाश्चात्यदेशे आङ्गलभाषया कृतात् भाषणात् केचन अंशाः संस्कृतेन अनूद्य अधस्तात् उद्ध्रियन्ते –

उन्नतिलाभस्य एकः एव उपायः – अस्माकं निकटे यत् कर्तव्यं वर्तते तस्य अनुष्ठानम्। तद्द्वारा शक्तिं सञ्चित्य क्रमशः परमपदम् प्रति गन्तव्यम्। यः अध्यापकः सदा अर्थहीनमेव यत्किमपि भाषते तस्मादपि यः चर्मकारः अल्पेन कालेन पादरक्षां निर्माय प्रददाति स एव श्रेयान्।

कश्चन युवा संन्यासी वनं गतवान्। बहुकालं स तत्र ध्यानम् भजनं योगाभ्यासञ्च अकरोत्। बहूनि वर्षाणि कठोरं तपः आचर्य कस्मिंश्चित् दिने वृक्षतले स समुपविष्टः आसीत्। तदा तस्य मस्तके शुष्कपत्राणि कानिचन अपतन्। उपरि पश्यन् सः एकं काकम् एकं बकञ्च अपश्यत्। काकबकौ परस्परं कलहायमानौ आस्ताम्। तौ दृष्ट्वा तस्य महान् क्रोधः जातः। सः अवोचत् – किम्, युवां मम मस्तके शुष्कपत्राणि पातयितुं साहसं कुरुथः। एवं वदन् यदा स कोपेन तौ अपश्यत् तदा तस्य मस्तकात् कश्चन अग्निरश्मिः निर्गत्य पक्षिणौ भस्मीचकार। तेन कृतस्य योगाभ्यासस्य एतावती शक्तिः। तस्य महान् आनन्दः जातः। मम ईदृशी शक्तिः विकसिता यत् दृष्टिप्रसारमात्रेण काकम् बकञ्च भस्मीकर्तुम् प्रभवामि इति विचिन्त्य सः अत्यानन्देन विह्वलः अभवत्।

किञ्चिदनन्तरं भिक्षाटनार्थं तेन नगरं गन्तव्यम् अभवत्। कस्यचित् गृहस्य पुरस्तात् स्थित्वा स अवदत् – मातः मह्यम् भिक्षां देहि इति। अन्तर्भागात् उत्तरम् आगतम् – वत्स, किञ्चित्कालम् प्रतीक्षस्व इति। युवकः अचिन्तयत् – हतभागिनि, कियता दुःसाहसेन माम् प्रतीक्षितुं वदसि। त्वम् इदानीमपि मम शक्तिं न जानासि इति। यदा स एवं चिन्तयति स्म तदा सा एव कण्ठध्वनिः पुनः श्रुता – वत्स, स्वस्य विषये अत्यधिकम् मा चिन्तय। अत्र काकः वा बकः वा नास्ति इति। स आश्चर्यचकितः जातः। तथापि तेन प्रतीक्षा करणीया अभवत्। अन्ते सा महिला बहिः आगतवती। स तस्याः पादयोः पतित्वा अपृच्छत् – मातः, त्वं कथं तत् ज्ञातवती इति। सा अवदत् – तात, अहं तव योगं वा तपः वा किमपि न जानामि। अहं काचित् इतरा महिला (इतरा महिला – *A common everyday woman; a simple lady.*)। प्रतीक्षस्व इति त्वाम् अवदम्, यतो हि मम पतिः रोगपीडितः अस्ति। अहं तस्य सेवायं निरता आसम्। सम्पूर्णेऽपि जीवने अहम् मम कर्तव्यं समनुष्ठातुम् प्रयतितवती। विवाहात् पूर्वम् पितरौ प्रति पुत्र्या यत् कर्तव्यं तत् मया कृतम्। अधुना विवाहिता पतिम् प्रति मम यत् कर्तव्यं तत् करोमि। एतावान् एव मम योगाभ्यासः। किन्तु कर्तव्यस्य कर्मणः ,समनुष्ठानेन मम ज्ञानचक्षुः समुन्मीलितम्। ततः एव अहं तव



मनोभावम् अरण्ये त्वया कृतञ्च सर्वम् अवगतवती। इतोऽपि उच्चतरं किमपि ज्ञातुम् इच्छसि चेत् समीपस्थस्य अपरस्य नगरस्य विपणीं गच्छ। तत्र कञ्चित् व्याधं द्रक्ष्यसि। स तुभ्यम् उपदेशं दास्यति, यम् प्राप्य त्वम् आनन्दितः भविष्यति इति।

संन्यासी अचिन्तयत् – तत्र नगरे कस्यचित् व्याधस्य समीपं किमर्थं गच्छामि इति। किन्तु गृहिण्याः सविधे यज्जातं तेन तस्य किञ्चित् ज्ञानोदयः जातः आसीत्। तस्मात् स व्याधं द्रष्टुं गतवान्। तस्य नगरस्य निकटम् आगत्य विपणीम् अपश्यत्। दूरात् एव संन्यासी तत्र अपश्यत् -- कश्चन स्थूलकायः व्याधः समुपविश्य मांसं खण्डयति। स मूल्यादिविषये बहुविधैः जनैः सह उच्चैः विवदन् मांसविक्रयणं करोति। युवा संन्यासी अचिन्तयत् – हे भगवन्, रक्ष। किम्, अस्य निकटे मया विद्या ग्रहीतव्या। अयं तु कस्यचित् पिशाचस्य अवतार इव भाति इति। एतन्मध्ये सः व्याधः मुखम् उन्नमय्य संन्यासिनं दृष्ट्वा अवदत् – स्वामिन्, किं सा महिला भवन्तम् अत्र प्रेषितवती। मम विक्रयः यावन्न समाप्यते तावत् उपविशतु इति। अत्र मम किं वा भविष्यति इति चिन्तयन् संन्यासी उपाविशत्। व्याधः स्वस्य कर्मणि निरतः। मांसविक्रयं समाप्य धनादिकं च समाहृत्य स संन्यासिनम् अवदत् – आगच्छतु श्रीमन्, मम गृहं समागच्छतु इति। गृहे सम्प्राप्ते व्याधः तस्मै आसनम् प्रदाय अवदत् – अत्र प्रतीक्षस्व इति। तदनन्तरं गृहम् प्रविश्य स्वस्य वृद्धौ पितरौ व्याधः स्नापितवान्। स तौ भोजितवान्, तयोः सन्तोषकरीं सर्वविधाम् अपि परिचर्यां कृतवान्। ततः संन्यासिनं समेत्य अपृच्छत् – भवान् अत्र मं द्रष्टुम् आगतः। वदतु, किमहं भवते करोमि इति। संन्यासी तम् प्रति आत्मनः परमात्मनश्च विषये कांश्चित् प्रश्नान् अकरोत्। तेषाम् उत्तररूपेण व्याधेन यत् उक्तं तत् महाभारतस्य अंशरूपेण व्याधगीता इति नाम्ना प्रसिद्धम्। इयं व्याधगीता अत्युन्नता वेदान्तविद्या, दर्शनस्य परा काष्ठा। यूयम् भगवद्गीतायाः नाम श्रुतवन्तः, सा श्रीकृष्णस्य उपदेशः। भगवद्गीताम् पठित्वा युष्माभिः इयं व्याधगीता पठितव्या। अयं वेदान्तदर्शनस्य चूडामणिः।

व्याधोपदेशे समाप्ते संन्यासी अत्यन्तं विस्मितः अभवत्। स व्याधम् अपृच्छत् – भवतः एतादृशम् अत्युन्नतं ज्ञानम् विद्यते, तथापि इदं व्याधशरीरम् अवलम्ब्य ईदृशं कुत्सितं कार्यं कस्मात् करोषि इति। तदा व्याधः उत्तरम् प्रायच्छत् – वत्स, किमपि कर्म कुत्सितं नास्ति। किमपि कर्म अपवित्रं नास्ति। इदं कार्यम् मम वंशगतम्, इदम् मम प्रारब्धलब्धम्। बाल्यकालाद् अहम् इदं कर्म अभ्यस्तवान्। अनासक्तः भूत्वा अहम् मम कर्तव्यानि कर्तुम् प्रयते। अहं योगं न जानामि, संन्यासदीक्षाम् अपि न स्वीकृतवान्। अहं कदापि सांसारिकं जीवनम् परित्यज्य वनं न गतवान्। तथापि मम समाजस्थितिम् अनुसृत्य मया यत् कर्तव्यं तस्य अनासक्तभावेन अनुष्ठानं कुर्वन् अहम् इदं ज्ञानम् प्राप्तवान् इति।

अस्यां कथायां व्याधः महिला च सानन्दम् आत्मसमर्पणपूर्वकं स्वस्य कर्तव्यं कर्म करोति स्म। फलतः तौ आत्मज्ञानं प्राप्तवन्तौ। अनेन इदं स्पष्टम् प्रमाणीकृतम् – यस्य कस्यचिदपि आश्रमस्य (आश्रमाः चत्वारः – ब्रह्मचर्यम्, गार्हस्थ्यम्, वानप्रस्थम्, संन्यासः।) कर्म भवतु, निःसङ्गतया स्वकर्तव्यस्य कर्मणः अनुष्ठानेन वयम् आत्मस्वरूपविषयिणीम् परमाम् अनुभूतिम् (आत्मस्वरूपविषयिणी परमा अनुभूतिः एव ब्रह्मविद्या इति उच्यते।) प्राप्स्यामः इति।



अस्माकं कर्तव्यम् प्रधानतः अस्माकम् परितःस्थित्या (परितःस्थितिः -- *Circumstances.*) निर्धारितम् भवति। कर्तव्यस्य कर्मणः स्वभावतः एव गौरवं वा लाघवं वा नास्ति। सकामः कर्ता तस्य भाग्ये यत् कर्तव्यं कर्म आपतितं तस्मिन् असन्तुष्टिम् प्रकटयति। परन्तु अनासक्तस्य कर्तुः सर्वाणि अपि कर्तव्यानि समानरूपेण साधूनि भवन्ति। तानि अमोघानि अस्त्राणि भूत्वा तस्य स्वार्थपरताम् इन्द्रियपरवशतां च विनाशयन्ति, ततश्च स साधकः मुक्तेः पथि अग्रे सरति॥



## पाठगतप्रश्नाः-३

७. कर्मयोगः कः।

८. योगबुद्धिः का, तया किं सिद्ध्यति।

९. कर्मयोगस्य किम् फलम्, तच्च कथम् प्राप्यते।

## २३.५ ध्यानयोगः

ध्यानयोगः क्वचित् उपासनम् इत्यपि अभिधीयते। बहिरङ्गसाधनरूपे ध्यानयोगे सगुणब्रह्मविषयकाणि उपासनानि वयं गृह्णीमः।

वेदान्तसारः इत्याख्ये ग्रन्थे सदानन्दयोगीन्द्रः वदति – उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि इति। सर्वप्राणिनाम् आत्मस्वरूपं ब्रह्म निर्गुणं चेदपि शास्त्रेण आचार्येण वा उपासनायाः सौकर्यार्थम् ब्रह्मणि नाम रूपं च कल्प्यते। एवम् उपासनासौकर्याय कल्पिताभ्यां नामरूपाभ्यां सहितं यत् ब्रह्म तत् सगुणम् ब्रह्म इति शास्त्रे प्रसिद्धम्। विष्णुः शिवः दुर्गा इत्याद्याः देवताः सगुणब्रह्मणः भिन्नानि रूपाणि भवन्ति। अस्माकम् अभीष्टं सगुणब्रह्मणः रूपम् आश्रित्य वयं गुरूपदेशम् अनुसृत्य उपासनं कर्तुं शक्नुमः। इदम् उपासनम् मनसा एव क्रियते। अतः उपासनम् मानसव्यापारः अस्ति। शाण्डिल्यविद्या इति नाम्ना विख्यातम् एकम् उपासनं छान्दोग्योपनिषदि श्रूयते। शाण्डिल्यविद्या इत्यत्र विद्या इति शब्दस्य उपासनम् इत्येव अर्थः।

### २३.५.१ ध्यानयोगः किमर्थम् अभ्यसनीयः

चित्तशुद्धिः अथवा अन्तःकरणशुद्धिः क्रमशः अभ्यासेन सम्पादनीया भवति। प्रथमं कर्मयोगाभ्यासः, तदनन्तरं ध्यानयोगाभ्यासश्च कर्तव्यः।

ननु केवलं कर्मयोगेन एव चित्तं शुद्धम् भवति, किमर्थम् ध्यानयोगः अपि अभ्यसनीयः इति भवति शङ्का। उच्यते – अत्यन्तम् एकाग्रचित्तानां केवलं कर्मयोगेन अपि अन्तःकरणं शुद्ध्यति। अन्येषान्तु ध्यानयोगाभ्यासः अपि विशिष्य कर्तव्यः अस्ति। चित्तस्य शुद्धिः चित्तमलानां चित्तविक्षेपाणाञ्च



नाशेन एव सम्भवति। चित्तमलानां नाशः कर्मयोगाभ्यासेन प्रायः भवति। चित्तविक्षेपाणान्तु नाशः ध्यानयोगेन भवति।

पूर्वपूर्वजन्मनां सुकृतदुष्कृतानि चित्ते अवस्थितानि चित्तमलानि इत्युच्यन्ते। निस्सङ्गतया कर्मयोगे समनुष्ठिते इमानि क्षयम् आप्नुवन्ति। एवञ्च चित्तं क्रमशः शुद्धम् भवति। किन्तु यावत् चित्तविक्षेपाः न क्षीणाः तावत् चित्तम् अतीव शुद्धं न जातम् इति ज्ञायते। निर्मलम् एकाग्रञ्च चित्तं शुद्धम् इत्युच्यते। विक्षेपैः चित्तम् अनेकाग्रम् भवति। अनेकाग्रं चित्तं न सम्पूर्णतः शुद्धम्। तस्मात् चित्तशुद्ध्यै चित्तविक्षेपाः निरोद्धव्याः। चित्तस्य विक्षेपाः सन्ति कामक्रोधादयः (कामक्रोधादयः मनोविक्षेपाः क्वचित् रागद्वेषादिशब्दैः अपि उच्यन्ते।) । तेषां विक्षेपाणां हेतवः भवन्ति संस्काराः। संस्कारेभ्यः विक्षेपाख्याः चित्तवृत्तयः पुनः पुनः जायन्ते। चित्तस्य वर्तनम् एव वृत्तिः इत्युच्यते। कदाचित् चित्तं कामरूपेण वर्तते। कदाचिच्च क्रोधरूपेण वर्तते। कदाचित् पुनः लोभरूपेण। यदा चक्षुरादीनि इन्द्रियाणि बाह्यपदार्थैः सम्बन्धम् प्राप्नुवन्ति तदा चित्तम् अथवा अन्तःकरणं कामादिवृत्तिं धत्ते। इष्टस्य कस्यचित् वस्तुनः दर्शनेन मनः कामरूपेण वर्तते। अनिष्टस्य कस्यचित् वस्तुनः दर्शनेन मनः क्रोधरूपेण वर्तते। एवञ्च प्रतिक्षणम् अन्तःकरणं कामक्रोधादिरूपेण वर्तन्ते। आभिः कामादिभिः वृत्तिभिः एव अन्तःकरणं विक्षिप्तम् भवति। तस्मात् इमाः वृत्तयः एव चित्तस्य विक्षेपाः। विक्षेपाः यदा तेषां संस्कारैः सह क्षीणाः भवन्ति तदा अन्तःकरणम् एकाग्रम् भवति। एकाग्रम् एव अन्तःकरणम् अतीव विशुद्धम्। चित्तैकाग्रतायै च ध्यानयोगः अभ्यसनीयः। ध्यानाभ्यासेन खलु चित्ते अवस्थितानां विक्षेपहेतूनां संस्काराणां ततः विक्षेपाणाञ्च नाशः सम्भवति।

## २३.५.२ भगवद्गीतायां ध्यानयोगोपदेशः

१. आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकः ३)

२. यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकः ४)

ध्यानयोगविधिः इत्थम् प्रोक्तः भगवता वासुदेवेन –

३. योगी युञ्जीत सततम् आत्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकः १०)

४. शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकः ११)

५. तत्रैकाग्रम् मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये॥ (श्रीमद्भगवद्गीता, अध्यायः ६, श्लोकाः १२)





## पाठगतप्रश्नाः-४

१०. उपासनस्य वेदान्तसारे प्रोक्तं लक्षणं किम्।

११. का वै चित्तवृत्तिः।

१२. चित्तविक्षेपाः के।

१३. चित्तविक्षेपाः कस्मात् निरोद्धव्याः।

१४. ध्यानयोगाभ्यासः किमर्थः।

## २३.६ भक्तियोगः

विषयवस्तुषु विरागः, ईश्वरे अनुरागश्च भक्तिः इति कथ्यते। भगवति परमम् प्रेम एव भक्तिरिति नारदभक्तिसूत्रे प्रोक्तम्। नारदः, प्रह्लादः इत्यादीनाम् बहूनाम् पुराणप्रसिद्धानाम् भगवद्भक्तानां कथाः श्रूयन्ते। पुरा आल्वार् इति प्रसिद्धाः विष्णुभक्ताः, नायन्मार् इति ख्याताः शिवभक्ताश्च द्राविडदेशे भक्तिमार्गस्य प्रवर्तकाः आसन्। रामानुजाचार्यः, मध्वाचार्यः, वल्लभाचार्यः, निम्बार्काचार्यः, कनकदासः, पुरन्दरदासः, अक्कमहादेवी, ज्ञानेश्वरः, एकनाथः, नामदेवः, तुकारामः, मीरा, तुलसीदासः, सूरदासः, कबीरदासः, चैतन्यमहाप्रभुः इत्याद्याः अगणनीयाः भगवद्भक्ताः भारतवर्षस्य भिन्नेषु प्रान्तेषु भक्तिवेदान्तम् प्रचारितवन्तः।

### २३.६.१ बहुविधाः भक्ताः

लोके केचन भक्ताः भवन्ति ये रोगादीनां दुःखानां निवृत्तिं वा धनादिविषयस्य प्राप्तिं वा इच्छन्तः ईश्वरम् भजन्ते। केचित् तु स्वाभीष्टे रूपे ईश्वरं द्रष्टुम् तं निरन्तरं ध्यायन्ति। केचित् पुनः केवलम् आत्मज्ञानम् एव इच्छन्तः भगवति भक्तिं कुर्वन्ति। अन्ये तु केचन अत्यल्पाः भगवान् मम च अन्येषां च भूतानाम् अन्तरात्मा इति ज्ञानम् अवाप्य सर्वात्मस्वरूपे शुद्धे तस्मिन् ब्रह्मणि भक्तियुक्ताः निवसन्ति। भगवान् श्रीकृष्णः चतुर्विधान् भक्तान् निर्दिश्य तेषु अयं यः ज्ञानी स एव श्रेष्ठः भक्तः इति वदति –

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥**
**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः॥**
**(श्रीमद्भगवद्गीता, अध्यायः ७, श्लोकौ १६, १७) इति।**

**अन्वयः –**



(हे) भरतर्षभ, (हे) अर्जुन, आर्तः जिज्ञासुः अर्थार्थी ज्ञानी च (इति) चतुर्विधाः सुकृतिनः जनाः माम् भजन्ते। तेषां नित्ययुक्तः एकभक्तिः ज्ञानी विशिष्यते। हि ज्ञानिनः अहम् अत्यर्थम् प्रियः, मम च स प्रियः।

**शब्दार्थाः –**

भरतर्षभः – भरतकुलीनेषु श्रेष्ठः। आर्तः – दुःखितः। जिज्ञासुः – ज्ञानेच्छुः। अर्थार्थी – धनेच्छुः। सुकृतिनः – पुण्यवन्तः। नित्ययुक्तः – नित्यः यः परमात्मा तेन सह युक्तः। एकभक्तिः – एकनिष्ठया भक्त्या सहितः। विशिष्यते – अतिशेते।

## २३.६.२ निर्गुणब्रह्मविषयिणी भक्तिः

**मोक्षकारणसामग्र्याम् भक्तिरेव गरीयसी।**
**स्वस्वरूपानुसन्धानम् भक्तिरित्यभिधीयते॥ (विवेकचूडामणिः ३२)**

**अन्वयः** – मोक्षकारणसामग्र्याम् भक्तिः एव गरीयसी। स्वस्वरूपानुसन्धानम् भक्तिः इति अभिधीयते।

**शब्दार्थः – कारणसामग्री** – साधनसमूहः। गरीयसी – श्रेष्ठा। स्वस्वरूपानुसन्धानम् – स्वस्य यत् स्वरूपं तस्य अनुसन्धानम्, आत्मस्वरूपस्य ब्रह्मणः अनुसन्धानम्। अनुसन्धानम् – विचारः। अभिधीयते – उच्यते।

**तात्पर्यम्** – मोक्षम् प्रति यानि साधनानि वर्तन्ते तेषु भक्तिः एव श्रेष्ठा। का वै भक्तिः। आत्मस्वरूपस्य ब्रह्मणः स्वरूपानुसन्धानमेव भक्तिः। शङ्करभगवत्पादैः इयम् अत्र निर्गुणब्रह्मविषयिणी भक्तिः उक्ता।

आत्मस्वरूपानुसन्धानरूपा भक्तिः क्रमशः आत्मस्वरूपज्ञानरूपेण परिणमते। निर्गुणब्रह्मणि पूर्वं यत्नेन कृता इयम् भक्तिः अभ्यासेन साधकस्य अन्तःकरणे दृढा भवति। सुदृढा इयं निर्गुणब्रह्मविषयिणी भक्तिः (निर्गुणब्रह्मविद्या) संसारहेतुभूतां निर्गुणब्रह्मविषयिणीम् अविद्यां नाशयति। ततश्च मुक्तिः भवति।

**भक्त्या माम् अभिजानाति यावान् यश्चास्मि तत्त्वतः।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ (श्रीमद्भगवद्गीता, अध्यायः १८, श्लोकः ५५)**

सर्वप्राणिनाम् आत्मरूपेण अवस्थितं यत् निर्गुणम् ब्रह्म तदेव श्रीभगवतः वास्तविकं स्वरूपम्। इदं जगदीश्वरस्य वास्तविकं स्वरूपं वयं ब्रह्मविद्यया एव अभिजानीमः। एवञ्च भक्त्या माम् अभिजानाति इत्यत्र श्रीभगवता उक्ता या भक्तिः सा ब्रह्मविद्या एव। ब्रह्मविद्यारूपा इयं निर्गुणब्रह्मविषयिणी भक्तिः चतुर्थी भक्तिः इत्यपि उच्यते। आर्तस्य भक्तिः प्रथमा, जिज्ञासोः भक्तिः द्वितीया, अर्थार्थिनः भक्तिः तृतीया, ज्ञानिनः भक्तिश्च चतुर्थी। अनया भक्त्या साधकः मुक्तः भवति।

निर्गुणब्रह्मणि भक्तिमतः लक्षणम् –

अद्वेष्टा सर्वभूतानाम् मैत्रः करुण एव च।



निर्ममो निरहङ्कारः समदुःखसुखः क्षमी॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः॥

समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥

(श्रीमद्भगवद्गीता, अध्यायः १२, श्लोकाः १३-१९)

## २३.६.३ सगुणब्रह्मविषयिणी भक्तिः

अद्वेष्टा सर्वभूतानाम् इत्यादिश्लोकैः श्रीभगवता गीताशास्त्रे वर्णितः यः निर्गुणब्रह्मभक्तः सः आत्मज्ञानी एव। अत्यन्तं शुद्धाचित्तैः तादृशैः महात्मभिः एव सर्वात्मस्वरूपे निर्गुणे ब्रह्मणि यथायथं ज्ञानरूपा भक्तिः कर्तुं शक्यते। अन्यैस्तु निर्गुणब्रह्मभक्तिलभ्याम् ब्रह्मविद्यां कामयमानैः आदौ सगुणे ब्रह्मणि भक्तिः अभ्यसनीया।

सर्वात्मभूते परमे ब्रह्मणि उपासनायाः सौकर्यार्थं शास्त्रेण आचार्येण वा नामरूपादिकं कल्प्यते। तत् एव उपास्यम् ब्रह्म सगुणब्रह्म इति च प्रसिद्धं वेदान्तशास्त्रे। शास्त्रम् अवलम्ब्य जीवैः कृताभिः अन्तःकरणगताभिः भावनाभिः सर्वेषाम् आत्मस्वरूपम् यत् ब्रह्म तत् निर्गुणमपि सगुणम् भवति। सगुणे ब्रह्मणि क्रियमाणम् प्रेम सगुणभक्तिरिति कथ्यते।

शुद्धम् ब्रह्म एव भक्तानाम् भावनानुरूपं रामरूपेण कृष्णरूपेण शिवरूपेण दुर्गारूपेण च आविर्भवति। एवञ्च विष्णुः, शिवः, दुर्गा, गणेशः, सरस्वती इत्याद्याः देवताः सगुणब्रह्मणः भिन्नानि रूपाणि भवन्ति। आसां देवतानाम् भजनोपासनाविधेः विवरणम् पुराणादिषु शास्त्रग्रन्थेषु दृश्यते। उपासकानाम् भक्तिवृद्ध्यर्थम् आसां देवतानाम् अवतारकथाः लीलावर्णनम् इत्यादि च तेषु ग्रन्थेषु विस्तारितम्।

सगुणब्रह्मणि फलकामनया ये भक्तिं कुर्वन्ति ते तत् फलं लभन्ते। किन्तु तेषां चित्तशुद्धिः न भवति। अत एव श्रीभगवान् गीताशास्त्रे उवाच –

**यो यो यां यां तनूम् भक्तः श्रद्धयाऽर्चितुमिच्छति।**



**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥**
**स तया श्रद्धया युक्तस्तस्याराधनमीहते।**
**लभते च ततः कामान् मयैव विहितान् हि तान्॥** (७/२१,२२)

नारदभक्तिसूत्रे भक्तिः एवं निरुक्ता – सा त्वस्मिन् परमप्रेमरूपा इति। अस्मिन् ईश्वरे परमम् प्रेम एव भक्तेः रूपम् इति नारदमहर्षिः अस्मान् बोधयति। भगवन्तं ये परमप्रेम्णा भजन्ते ते भगवत्कृपया शुद्धचित्ताः भूत्वा ब्रह्मविद्याम् अवाप्य संसारात् मुक्ताः भवन्ति। इदं श्रीभगवान् स्वयं गीताशास्त्रे प्रतिज्ञातवान् –

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥**
**तेषां सततयुक्तानाम् भजताम् प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥**
**तेषामेवानुकम्पार्थम् अहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥** (१०/९,१०,११)

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते॥**
**तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।**
**भवामि नचिरात् पार्थ मय्यावेशितचेतसाम्॥** (१२/६,७)

## २३.६.४ भागवतप्रसिद्धा नवविधा भक्तिः

सगुणब्रह्मणि भक्तिः कथम् अभ्यसनीया इति जिज्ञासा सम्भवति। नवभिः सोपानैः समन्वितः कश्चन भक्तिमार्गः श्रीकृष्णभक्तानां कृते भागवतमहापुराणे निरूपिता वर्तते। अयम् भक्तिमार्गः नवविधा भक्तिः इति प्रसिद्धः। अनेन मार्गेण वयम् न केवलं श्रीकृष्णे अपि तु अस्माकम् अभीष्टे सगुणब्रह्मणः यस्मिन् कस्मिन्नपि रूपे भक्तिं लब्धुं शक्नुमः।

**श्रवणं कीर्तनं विष्णोः स्मरणम् पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ (भागवतमहापुराणम् ७.५.२३)**

श्रवणम् – विष्णोः सर्वव्यापिनः ईश्वरस्य नाम्नां माहात्म्यस्य च श्रवणम्।

कीर्तनम् – भगवतः गुणानां नाम्नां च सङ्कीर्तनम् अथवा गानम्।

स्मरणम् – भगवद्विषये एव सर्वदा स्मरणम्।

पादसेवनम् – भगवतः पादपद्मयोः सेवा।

अर्चनम् – भगवतः पूजनम्।



वन्दनम् – नमस्क्रिया।

दास्यम् – भगवतः दासरूपेण आचरणम्।

सख्यम् – भगवता सह सौहार्दम्।

आत्मनिवेदनम् – भगवति आत्मसमर्पणम्।

### २३.६.५ भक्तियोगविषयकाः श्लोकाः

पत्रम् पुष्पम् फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहम् भक्त्युपहृतम् अश्नामि प्रयतात्मनः॥ (९.२६)
यत् करोषि यदश्नाति यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥ (९.२७)
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु माम् भक्त्या मयि ते तेषु चाप्यहम्॥ (९.२९)
अपि चेत् सुदुराचारो भजते माम् अनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥ (९.३०)
क्षिप्रम् भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥ (९.३१)

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्यद् भाव्यम् भवतु भगवन् पूर्वकर्मानुरूपम्।
एतत् प्रार्थ्यम् मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु॥ (राजा कुलशेखरः मुकुन्दमालास्तोत्रे)

तृणादपि सुनीचेन तरोरपि सहिष्णुना। अमानिना मानदेन कीर्तनीयः सदा हरिः॥ (श्रीकृष्णचैतन्यः शिक्षाष्टके)



## पाठगतप्रश्नाः-५

१५. का वै भक्तिः।

१६. भगवद्गीतानुसारं चतुर्विधाः भक्ताः के।

१७. निर्गुणब्रह्मविषयिणी भक्तिः का।



१८. सगुणब्रह्मविषयिणी भक्तिः का।

१९. नवविधभक्तिप्रख्यापकः भागवतश्लोकः कः।

## २३.७ यमनियमादिकम्

षट्सु वैदिकदर्शनेषु योगदर्शनम् अन्यतमम्। पतञ्जलिमहर्षिः अस्य दर्शनस्य प्रसिद्धः आचार्यः। पतञ्जलिमहर्षिणा प्रणीते योगसूत्रम् इत्याख्ये ग्रन्थे अष्टाङ्गयोगमार्गः वर्णितः। अस्य योगस्य अष्टौ अङ्गानि अथवा सोपानानि सन्ति इत्यतः अयं योगः अष्टाङ्गयोगः इति प्रसिद्धः। पातञ्जलयोगस्य अष्टौ अङ्गानि तावत् – यमः, नियमः, आसनम्, प्राणायामः, प्रत्याहारः, धारणा, ध्यानम्, समाधिः इत्येतानि। एषु अष्टसु अङ्गेषु यमम् आरभ्य प्रत्याहारं यावत् यानि अङ्गानि सन्ति तानि अन्तःकरणशुद्धिद्वारा साधनचतुष्टयोत्पत्तिम् प्रति उपायाः भवन्ति इति वेदान्तदर्शनस्य आचार्याः अङ्गीकुर्वन्ति।

एषु अङ्गेषु यमादीनाम् अङ्गानाम् अर्थः अधस्तात् प्रदर्श्यते –

| | |
|---|---|
| यमः | अहिंसा, सत्यम्, अस्तेयः, ब्रह्मचर्यम्, अपरिग्रहः इति पञ्च यमशब्देन उच्यन्ते। |
| नियमः | शौचम्, सन्तोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानम् इति पञ्च नियमशब्देन कथ्यन्ते। |
| आसनम् | स्थिरतया सुखेन च दीर्घकालं यावत् उपवेशनं यथा सम्भवति तथा हस्तपादादीनां संस्थापनम् आसनम् इति प्रोच्यते। पद्मासनम्, स्वस्तिकासनम् इत्यादिनामभिः बहुविधानि आसनानि प्रसिद्धानि सन्ति। |
| प्राणायामः | रेचकः, पूरकः, कुम्भकः इति त्रिभिः उपायैः क्रियमाणः प्राणनिग्रहार्थकः अभ्यासः प्राणायामः इति व्यपदिश्यते। |
| प्रत्याहारः | विषयवस्तुभ्यः इन्द्रियाणाम् प्रत्याहरणम् प्रत्याहारः इत्युच्यते। |



## पाठगतप्रश्नाः-६

२०. यमाः के।

२१. नियमाः के।

२२. प्रत्याहारस्य किं लक्षणम्।

## २३.८ परम्परासाधनानाम् फलम्

परम्परासाधनानि चित्तशुद्धेः कारणानि भवन्ति इति पूर्वमेव आपाततः प्रोक्तम्। वस्तुतः एकैकमपि परम्परासाधनं चित्ते भिन्नम् भिन्नं सामर्थ्यम् उत्पादयति। चित्ते स्थितानाम् पुण्यपापादीनाम् मलानां नाशः कर्मयोगेन भवति। चित्तस्य ये विक्षेपाः तेषां क्षयः ततः एकाग्रता च ध्यानयोगस्य फलम्। भक्तियोगस्य तु एतदुभयम् अपि फलम्। यमनियमादीनामपि तथैव।






## पाठसारः

चित्तशुद्धिकारणानि साधनानि एव परम्परासाधनानि अथवा बहिरङ्गसाधनानि इत्युच्यन्ते। कर्मयोगः, ध्यानयोगः, भक्तियोगः, यमनियमादिकम् इत्यादीनि नानाविधानि परम्परासाधनानि शास्त्रे निर्दिश्यन्ते। कर्तृत्वबुद्धिम् फलाभिसन्धिञ्च वर्जयित्वा योगबुद्ध्या नित्यनैमित्तिकप्रायश्चित्तादिकर्मणां समनुष्ठानं कर्मयोगः इति कथ्यते। निर्गुणब्रह्मणः सगुणब्रह्मणश्च उपासने ध्यानम् भक्तिश्च अन्तर्भवतः। तथापि ध्यानयोगः उपासनाशब्देन अधिकतया निर्दिश्यते। निर्गुणब्रह्मस्वरूपस्य अनुसन्धानं वा सगुणब्रह्मणि प्रेम वा भक्तिः इति प्रोच्यते। यमादयश्च पातञ्जलानाम् अष्टाङ्गयोगमार्गे प्रसिद्धाः। कर्मयोगादिषु एकेन एकाधिकेन वा साधनेन यस्य अन्तःकरणम् प्रायेण शुद्ध्यति तस्मिन्नेव सहकारिसाधनानि प्रकाशन्ते।



## पाठान्तप्रश्नाः

१. शास्त्रे निर्दिष्टानि नानाविधानि परम्परासाधनानि कानि।
२. अन्तःकरणं कथं शुद्धम् भवतीति विद्युद्दीपदृष्टान्तेन विशदयत।
३. उपासनं वै किम्, द्विविधम् उपासनं किम्, भक्तियोगः ध्यानयोगश्च कथम् उपासनेषु अन्तर्भवति।
४. कर्मयोगस्य किम् फलम्, तच्च कथम् प्राप्यते।



५. उपासनस्य वेदान्तसारे प्रोक्तं लक्षणं किम्।

६. का वै चित्तवृत्तिः।

७. चित्तविक्षेपाः के. ते कस्मात् निरोद्धव्याः।

८. ध्यानयोगाभ्यासः किमर्थः।

९. का वै भक्तिः, तस्याः द्वैविध्यं किम्।

१०. भगवद्गीतानुसारं चतुर्विधाः भक्ताः के, सश्लोकं व्याख्यात।

११. निर्गुणब्रह्मभक्तेः सगुणब्रह्मभक्तेश्च कः भेदः।

१२. भागवतप्रसिद्धां नवविधाम् भक्तिं व्याख्यात।

१३. यमाः नियमाश्च के।

१४. परम्परासाधनानाम् फलं किम्।



## पाठगतप्रश्नोत्तराणि

### पाठगतप्रश्नोत्तराणि-१

१. परम्परासाधनानि बहिरङ्गसाधनानि इत्यपि उच्यन्ते।

२. चित्तशुद्धिकारकाणि साधनानि एव परम्परासाधनानि भवन्ति। तानि नानाविधानि शास्त्रे निर्दिश्यन्ते। यथा छान्दोग्योपनिषदि आहारशुद्ध्या चित्तशुद्धिः भवतीति उक्तम्। भगवान् श्रीकृष्णः श्रीमद्भगवद्गीतायां यज्ञः, दानं, तपः इत्येतानि निस्सङ्गतया अनुष्ठितानि चित्तशुद्धिकारणानि भवन्ति इति अस्मान् उपदिशति। मनुमहर्षिः मनुस्मृतौ तपः चित्तशुद्धेः साधनम् भवति इति बोधयति। कर्मयोगेन चित्तशुद्धिः भवति इत्यपि श्रीभगवान् गीताशास्त्रे समुपदिशति। ध्यानेन चित्तं शुद्ध्यति इत्यपि भगवान् गीताशास्त्रे वदति। योगदर्शने प्रसिद्धानि यमनियमादीनि साधनानि अपि अन्तःकरणशुद्धिं जनयन्ति इति शङ्करभगवत्पादाः ब्रह्मसूत्रभाष्ये अङ्गीकुर्वन्ति। अन्यानि अपि बहुविधानि साधनानि सत्त्वशुद्धिकारणानि शास्त्रेषु श्रूयन्ते।

### पाठगतप्रश्नोत्तराणि-२

३. शास्त्रे बहुविधानि कर्माणि उपासनानि च विहितानि सन्ति। यदि वयम् एषां कर्मणाम् उपासनानाञ्च अनुष्ठानम् फलेच्छया एव कुर्मः तर्हि वयम् पुनः पुनः कामनानां वशीभूताः एव भवामः। प्रत्युत यदि फलेच्छाम् परित्यज्य वयं कर्मोपासनानुष्ठाने निरताः भवेम तर्हि अस्माकम् अन्तःकरणं शुद्धम् एकाग्रं च भवेत्।

४. विद्युद्दीपः प्रकाशकद्रव्येण पूर्णः अस्ति चेदपि तस्य बहिर्देशः धूल्यादिमालिन्ययुक्तः चेत् सः स्वस्य अन्तः निहितायाः दीप्तेः बहिः प्रकाशने असमर्थः भवति। एवमेव अन्तःकरणम्



प्रकाशनशीलेन सत्त्वगुणेन सहितं चेदपि रजसा तमसा च योगात् अशुद्धम् अस्ति इत्यतः स्वान्तर्निहितस्य ब्रह्मणः प्रकाशने असमर्थम् भवति। तस्मात् यदि अस्माभिः ब्रह्मविद्या इष्यते तर्हि प्रथमम् अन्तःकरणस्य शुद्धिः यत्नेन सम्पादनीया। अन्तःकरणे विद्यमानात् सत्त्वगुणात् रजोगुणः तमोगुणश्च दूरीकरणीयः इत्यर्थः।

५. सगुणब्रह्मविषयकं निर्गुणब्रह्मविषयकञ्चेति द्विविधम् उपासनम्।

६. मानसव्यापाररूपम् अस्ति उपासनम्। ध्यानम् भक्तिश्च मनसा एव क्रियते। तस्मात् ध्यानयोगस्य भक्तियोगस्य च मानसव्यापाररूपे उपासने अन्तर्भावः भवति।

**पाठगतप्रश्नोत्तराणि-३**

७. कर्मणां योगबुद्ध्या समनुष्ठानम् एव कर्मयोगः इति प्रोच्यते। अहं करोमि इति कर्तृत्वबुद्धिम् इदं फलम् मम भवतु इति फलाभिसन्धिं च विना स्वकर्मणां समनुष्ठानं कर्मयोगः इति कथ्यते।

८. अहं करोमि इति कर्तृत्वबुद्धिम् इदं फलम् मम भवतु इति फलाभिसन्धिं च विना या बुद्धिः निस्स्वार्थतायाम् अवतिष्ठति सा एव योगबुद्धिः। योगबुद्धिः कामक्रोधादिभिः कदापि न विचलति। योगबुद्धियुक्तः जनः सर्वाणि अपि कर्माणि यत्नेन करोति चेदपि कर्मफलानां सिद्धौ न तुष्यति, तेषाम् असिद्धौ च न खिद्यति। स समत्वेन सर्वम् पश्यति। अनया बुद्ध्या यदि वयं कर्माणि कुर्मः तर्हि अस्माकम् अन्तःकरणं शुद्धम् भविष्यति, क्रमेण साधनचतुष्टयञ्च सम्पत्स्यते।

९. कर्मयोगस्य अन्तःकरणशुद्धिरेव फलम्। कर्मयोगः महत् पुण्यकर्म वर्तते। निष्कामकर्मयोगेन जातेन पुण्येन चित्तस्य पापं नश्यति। रागद्वेषादिकम् अथवा कामक्रोधादिकम् अस्ति चित्तस्य पापम्। इदम् पापम् एव चित्तस्य मलम्। मलिनं चित्तं वेदान्तवाक्यैः बोधितस्य आत्मस्वरूपस्य सुष्ठु ग्रहणे समर्थं न भवति। यदा साधकः निस्सङ्गतया कर्माचरणे निष्ठां प्राप्नोति तदा पापानि विनश्यन्ति, चित्तं च शुद्ध्यति।

**पाठगतप्रश्नोत्तराणि-४**

१०. उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि इति।

११. चित्तस्य वर्तनम् एव वृत्तिः इत्युच्यते। कदाचित् चित्तं कामरूपेण वर्तते। कदाचिच्च क्रोधरूपेण वर्तते। कदाचित् पुनः लोभरूपेण। यदा चक्षुरादीनि इन्द्रियाणि बाह्यपदार्थैः सम्बन्धम् प्राप्नुवन्ति तदा चित्तम् अथवा अन्तःकरणं कामादिवृत्तिं धत्ते। इष्टस्य कस्यचित् वस्तुनः दर्शनेन मनः कामरूपेण वर्तते। अनिष्टस्य कस्यचित् वस्तुनः दर्शनेन मनः क्रोधरूपेण वर्तते। एवञ्च कामक्राधादयः चित्तस्य वृत्तयः इत्युच्यन्ते।

१२. कामादिभिः वृत्तिभिः एव अन्तःकरणं विक्षिप्तम् भवति। तस्मात् इमाः वृत्तयः एव चित्तस्य विक्षेपाः।



१३. निर्मलम् एकाग्रञ्च चित्तं शुद्धम् इत्युच्यते। विक्षेपैः चित्तम् अनेकाग्रम् भवति। अनेकाग्रं चित्तं न सम्पूर्णतः शुद्धम्। तस्मात् चित्तशुद्ध्यै चित्तविक्षेपाः निरोद्धव्याः।

१४. ध्यानयोगाभ्यासः चित्तविक्षेपाणां नाशेन चित्तैकाग्रतायाः ततः चित्तशुद्धेश्च सम्पादनाय। विक्षेपाणां हेतवः भवन्ति संस्काराः। संस्कारेभ्यः विक्षेपाख्याः चित्तवृत्तयः पुनः पुनः जायन्ते। ध्यानाभ्यासेन चित्ते अवस्थितानां विक्षेपहेतूनां संस्काराणां ततः विक्षेपाणाञ्च क्रमशः नाशः सम्भवति। ततश्च चित्तम् एकाग्रं शुद्धञ्च भवति।

**पाठगतप्रश्नोत्तराणि-५**

१५. विषयवस्तुषु विरागः, ईश्वरे अनुरागश्च भक्तिः इति कथ्यते। भगवति परमम् प्रेम एव भक्तिरिति नारदभक्तिसूत्रे प्रोक्तम्।

१६. आर्तः, जिज्ञासुः, अर्थार्थी, ज्ञानी चेति चतुर्विधाः भक्ताः भगवद्गीतायाम् भगवता प्रोक्ताः।

१७. आत्मस्वरूपस्य निर्गुणस्य ब्रह्मणः स्वरूपानुसन्धानमेव निर्गुणब्रह्मविषयिणी भक्तिः। आत्मस्वरूपानुसन्धानरूपा भक्तिः क्रमशः आत्मस्वरूपज्ञानरूपेण परिणमते। निर्गुणब्रह्मणि पूर्वं यत्नेन कृता इयम् भक्तिः अभ्यासेन साधकस्य अन्तःकरणे दृढा भवति। सुदृढा इयम् भक्तिः निर्गुणब्रह्मविद्यारूपम् प्राप्य संसारहेतुभूतां निर्गुणब्रह्मविषयिणीम् अविद्यां नाशयति।

१८. सर्वात्मभूते परमे ब्रह्मणि उपासनायाः सौकर्यार्थं शास्त्रेण आचार्येण वा नामरूपादिकं कल्प्यते। तत् एव उपास्यम् ब्रह्म सगुणब्रह्म इति च प्रसिद्धं वेदान्तशास्त्रे। शास्त्रम् अवलम्ब्य जीवैः कृताभिः अन्तःकरणगताभिः भावनाभिः सर्वेषाम् आत्मस्वरूपम् यत् ब्रह्म तत् निर्गुणमपि सगुणम् भवति। अस्मिन् सगुणे ब्रह्मणि रामकृष्णगणेशदुर्गादिरूपे क्रियमाणम् प्रेम सगुणभक्तिरिति कथ्यते। सगुणभक्त्या सगुणब्रह्मणः कृपाम् प्राप्य भक्तः विशुद्धान्तःकरणः सन् ब्रह्मविद्याम् प्राप्नोति।

१९. "श्रवणं कीर्तनं विष्णोः स्मरणम् पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥" इति।

**पाठगतप्रश्नोत्तराणि-६**

२०. अहिंसा, सत्यम्, अस्तेयः, ब्रह्मचर्यम्, अपरिग्रहश्चेति यमाः।

२१. शौचम्, सन्तोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानञ्चेति नियमाः।

२२. विषयवस्तुभ्यः इन्द्रियाणाम् प्रत्याहरणम् प्रत्याहारः।

॥ इति त्रयोविंशः पाठः ॥

